| | | |
|---|---|---|
| किम् | શો ઉપયોગ, પ્રશ્નસૂચક અવ્યય | शुचि मनो यद्यस्ति **तीर्थेन किम्**। **आवयोः किमनया विचारणया**। |
| किमङ्ग<br>किमु<br>किमुत<br>किंपुनः | કેટલું બધું વધારે,<br>કેટલું બધું ઓછું | तृणेन कार्यं भवतीश्वराणां **किमङ्ग**वाग्हस्तवता नरेण। एकैकमपि अनर्थाय **किमु** यत्र चतुष्टयम्। त्रैलोक्यस्यापि प्रभुत्वं त्वयि युज्यते, **किमुत** पृथिव्याः। |
| कृतम् | બસ કરવું | **कृतं रुदनेन**। |
| कृते | ને માટે | मातिमात्रं **मम कृते** उत्कण्ठस्व। |
| क्व | ક્યાં | प्रचलिते मरुति क्षणमन्यथा **क्व** भवान् **क्व** वयम् **क्व** च चातकाः। |
| खलु | ખરેખર | न **खलु** धीमतां कश्चिदविषयो नाम। |
| जातु | જરા પણ, બનવા જોગ છે કે, | न **जातु** कामः कामानामुपभोगेन प्रशाम्यति। |
| तावत | ખરેખર,<br>મારા તરફથી (on my part) | एतावतापि **तावत्** पीडा न निष्क्रामति। अहमपि **तावदे**वं घटयेयं यथा मम वैरतृप्तिर्भवेत्। |
| धिक् | ધિક્કાર હો | उपस्थितश्रेयोऽवमानिनं **मां धिक्**। **धिग्** इयम् **दरिद्रता**। |
| नमः | નમસ્કાર હો | **नमो भगवते वासुदेवाय**। |
| नाम | નામે,<br>ખરેખર | शंबूको **नाम** वृषलः पृथिव्यां तप्यते तपः। यत्रैवमपि **नाम** विश्रामं लभेय। |
| प्रति | ને વિષે | मन्दौत्सुक्योऽस्मि नगर**गमनम् प्रति**। |
| प्रभृति | માંડીને | प्रियंवदा शकुन्तलायाः **जन्मनः प्रभृति** वृत्तान्तम् दुष्यन्ताय अकथयत। |

| | | |
|---|---|---|
| प्राक् | પહેલાં | नमस्त्रिमूर्तये तुभ्यं **प्राक् सृष्टेः** केवलात्मने । |
| बत | ખરેખર | अहो **बत** महत्कष्टं विपरीतमिदं जगत् । |
| बहिः | બહાર | विदुषां **वदनाद्वाचः** सहसा गच्छन्ति नो **बहिः** । |
| यथा–तथा | જેમ–તેમ<br>જેથી<br>એમ–કે | **यथा**चिन्तितानि दुःखानि **तथा** सुखान्यपि देहिनामागच्छन्ति । अहमपि तावदेवं घटयेयं **यथा** मम वैरतृप्तिर्भवेत् । **तथा** वर्तितुम् प्रयतेथा **यथा** हास्यास्पदं मा भवेः । |
| यावत्–<br>तावत् | જેવો–તેવો.<br>જેમજેમ–તેમ<br>તેમ, પહેલાં | **यावत्स** भक्षयितुमारभते **तावत्तस्यायु**बन्धनं छिन्नम् । **यावदेकैक** आगच्छत् **तावत्स** आगच्छ मूर्खराजेति तं स्वागतं व्याहरत् । **यावत्स** तरुशिखरात् **न** अवतरति **तावदहम्** वृक्षतलम् भजे । |
| वरं–न | સારું–નહિ | **वरमेको** गुणी पुत्रो **न** च मूर्खशतान्यपि । |
| विना | વગર | **विनयेन विना** का श्रीः का निशा **शशिना विना** । |
| सह, साकं,<br>सार्धम् | સાથે | न स्थातव्यं न गन्तव्यं क्षणमपि **अधमैः सह** । |
| हन्त | હર્ષસૂચક કે અફ-<br>સોસ દર્શક અવ્યય | अखिलेषु विहंगेषु **हन्त** शुकस्य पञ्जरबन्धः ।<br>**हन्त** मे पुत्रोऽक्षतशरीर आगच्छति । |
| हा | અફસોસ | **हा** मे **मन्दभाग्यम्** । |

# सुभाषितानि (II)

मूकं करोति वाचालं पङ्गुं लङ्घयते गिरिम् ।
यत्कृपा तमहं वन्दे परमानन्दमाधवम् ॥ १ ॥

नमस्त्रिमूर्तये तुभ्यं प्राक् सृष्टेः केवलात्मने ।
गुणत्रयविभागाय पश्चाद्भेदमुपेयुषे ॥ २ ॥

अपराधसहस्राणि क्रियन्तेऽहर्निशं मया ।
दासोऽहमिति मां मत्वा क्षमस्व परमेश्वर ॥ ३ ॥

भवन्ति नम्रास्तरवो फलोद्गमैर्नवाम्बुभिर्भूरिविलम्बिनो घनाः ।
अनुद्धताः सत्पुरुषाः समृद्धिभिः, स्वभाव एवैष परोपकारिणाम्॥४॥

अयं निजः परो वेति गणना लघुचेतसाम् ।
उदारचरितानां तु वसुधैव कुटुम्बकम् ॥ ५ ॥

स्पृहणीयाः कस्य न ते सुमतेः सरलाशया महात्मानः ।
त्रयमपि येषां सदृशं हृदयं वचनं तथाचारः ॥ ६ ॥

वदनं प्रसादसदनं, सदयं हृदयं, सुधामुचो वाचः ।
करणं परोपकरणं येषां केषां न ते वन्द्याः ॥ ७ ॥

उपकर्तुं प्रियं वक्तुं कर्तुं स्नेहमकृत्रिमम् ।
सज्जनानां स्वभावोऽयं केनेन्दुः शिशिरीकृतः ॥ ८ ॥

परदुःखं समाकर्ण्य स्वभावसरलो जनः ।
उपकारासमर्थत्वात्प्राप्नोति हृदये व्यथाम् ॥ ९ ॥

कर्मणा मनसा वाचा सर्वावस्थासु सर्वदा ।
परपीडां न कुर्वन्ति न ते यान्ति यमक्षयम् ॥ १० ॥

दानाय लक्ष्मीः सुकृताय विद्या चिन्ता परब्रह्मविनिश्चयाय ।
परोपकाराय वचांसि यस्य वन्द्यस्त्रिलोकीतिलकः स एकः ॥ ११ ॥

श्लाघ्यः स एको भुवि मानवानां स उत्तमः सत्पुरुषः स धन्यः ।
यस्यार्थिनो वा शरणागता वा नाशाभिभङ्गाद्विमुखाः प्रयान्ति ॥१२॥

पत्रपुष्पफलच्छायामूलवल्कलदारुभिः ।
धन्या महीरुहो येभ्यो निराशां यान्ति नार्थिनः ॥ १३ ॥

आदौ तु मन्दमन्दानि मध्ये समरसानि च ।
अन्ते स्नेहायमानानि संगतानि बुधैः सह ॥ १४ ॥

आमरणान्ताः प्रणयाः कोपास्तत्क्षणभंगुराः ।
परित्यागाश्च निःसङ्गा भवन्ति हि महात्मनाम् ॥ १५ ॥

यस्य वाङ्मनसी शुद्धे सम्यग्गुप्ते च सर्वदा ।
स वै सर्वमवाप्नोति वेदान्तोपगतं फलम् ॥ १६ ॥

अनुगन्तुं सतां वर्त्म कृत्स्नं यदि न शक्यते ।
स्वल्पमप्यनुगन्तव्यं मार्गस्थो नावसीदति ॥ १७ ॥

गच्छन् पिपीलिको याति योजनानां शतान्यपि ।
अगच्छन्वैनतेयोऽपि पदमेकं न गच्छति ॥ १८ ॥

कीटोऽपि सुमनःसङ्गादारोहति सतां शिरः ।
अश्मापि याति देवत्वं महद्भिः सुप्रतिष्ठितः ॥ १९ ॥

कुलीनैः सह संपर्कः पण्डितैः सह मित्रताम् ।
ज्ञातिभिश्च समं मेलं कुर्वाणो न विनश्यति ॥ २० ॥

नित्यं हिताहारविहारसेवी समीक्ष्यकारी विषयेष्वसक्तः ।
दाता समः सत्यपरः क्षमावानाप्तोपजीवी च भवत्यरोगः ॥ २१ ॥

यस्य यस्य हि यो भावस्तेन तेन हि तं नरम् ।
अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत् ॥ २२ ॥

उपकारगृहीतेन शत्रुणा शत्रुमुद्धरेत् ।
पादलग्नं करस्थेन कण्टकेनैव कण्टकम् ॥ २३ ॥

बलीयसा हीनबलो विरोधं न भूतिकामो मनसापि वाञ्छेत् ।
न बध्यते वेतसवृत्तिरत्र व्यक्तप्रणाशो हि पतङ्गवृत्तेः ॥ २४ ॥

चिन्तनीया हि विपदामादावेव प्रतिक्रिया ।
न कूपखननं युक्तं प्रदीप्ते वह्निना गृहे ॥ २५ ॥

धर्मार्थं क्षीणवित्तस्य क्षीणत्वमपि शोभते ।
सुरैः पीतावशेषस्य कृष्णपक्षे विधोरिव ॥ २६ ॥
संप्राप्तमवमानं यस्तेजसा न प्रमार्जति ।
कस्तस्य पौरुषेणार्थो महताप्यल्पचेतसः ॥ २७ ॥
मर्तव्यमिति यद्दुःखं पुरुषस्योपजायते ।
शक्यते नानुमानेन परेण परिवर्णितुम् ॥ २८ ॥
वितर वारिद वारि दवातुरे चिरपिपासितचातकपोतके ।
प्रचलिते मरुति क्षणमन्यथा, क्व नु भवान् क्व वयं क्व च चातकाः॥२९॥
खद्योतो द्योतते तावद्यावन्नोदयते शशी ।
उदिते तु सहस्रांशौ न खद्योतो न चन्द्रमाः ॥ ३० ॥
निरर्थकं जन्म गतं नलिन्या यया न दृष्टं तुहिनांशुबिम्बम् ।
उत्पत्तिरिन्दोरपि निष्फलैव कृता विनिद्रा नलिनी न येन ॥ ३१ ॥
को न याति वशं लोके मुखे पिण्डेन पूरितः ।
मृदङ्गो मुखलेपेन करोति मधुरध्वनिम् ॥ ३२ ॥
यस्मिन्नेवाधिकं चक्षुरारोपयति पार्थिवः ।
अकुलीनः कुलीनो वा स श्रियो भाजनं नरः ॥ ३३ ॥
भो दारिद्र्य नमस्तुभ्यं सिद्धोऽहं त्वत्प्रसादतः ।
पश्याम्यहं जगत्सर्वं न मां पश्यति कश्चन ॥ ३४ ॥

## શબ્દકોશ

अकृत्रिम ( વિ. )=કુદરતી
अनु+प्र+विश् ( ६ થી પ )=મેળ રાખીને ભળી જવું
अल्पचेतस्=અલ્પબુદ્ધિવાળો
अहर्निशम्=રાત દિવસ
आदौ ( અ. )=શરૂઆતમાં
आप्तोपजीविन्=સ્નેહીઓ પર જીવનારો
आमरणान्तः=મરણથી જેનો અંત આવે છે એવો
उद्गमः ( ન. )=ફાળ
उप+कृ=ઉપકાર કરવો
उपायिवस्=જનાર, પામનાર
कण्टकम्–कः=કાંટો
करस्थ ( વિ. )=હાથમાં રાખેલો
कृत्स्न ( વિ. )=આખું

**केवलात्मन्**=કેવળ આત્મસ્વરૂપ
**क्व** ( અ. )=ક્યાં
**क्षिप्रम्** ( અ. )=તરતજ
**खद्योतः** ( ન. )=આગિયો
**गुणत्रयम्** ( ના. )=ત્રણ ગુણો–સત્ત્વ, રજસ્, તમસ્–નો સમુદાય
**गुप्त** ( કૃ. )=સાચવેલું
**तत्क्षणभङ्गुर**=જેનો તરત નાશ થાય છે એવું
**त्रिमूर्ति**=બ્રહ્મા, વિષ્ણુ અને મહેશનું સંયુક્ત સ્વરૂપ
**त्रिलोकीतिलक**=ત્રણ લોકોને શણગારરૂપ
**दारु** ( ના. )=લાકડું
**निःसङ्ग**=આસક્તિ વગરનું
**पतङ्गवृत्तिः**=પતંગિયાના જેવી વૃત્તિ વાળો
**पादलग्न**=પગમાં લાગેલો
**पोतकः** ( ન. )=બચ્ચું
**प्रतिक्रिया** ( નારી )=દૂર કરવાનો ઉપાય
**प्र+मृज् [ मार्ज् ]**=સાફ કરવું
**बुधः** ( ન. )=ડાહ્યો માણસ
**भूतिकामः**=આબાદીની ઇચ્છાવાળો
**भूरि** ( વિ. )=ઘણું
**महीरुह्** ( ન. )=ઝાડ
**मार्गस्थः**=રસ્તે પડેલો
**मूक** ( વિ. )=મૂંગો
**मृदङ्गः** ( ન. )=પખાજ
**मेधाविन्**=બુદ્ધિશાળી
**मेलः** ( ન. )=સહવાસ, પરિચય
**लङ्घ्**=ઓળંગાવવું
**लघुचेतस्**=ટૂંકી વૃત્તિનો
**योजनम्** ( ના. )=૪ કોસનો અંતર
**वर्त्मन्** ( ના. )=રસ્તો
**वल्कलम्** ( ના. )=ઝાડની છાલ
**वाचाल** ( વિ. )=બહુબોલો
**वारिदः** ( ન. )=વાદળ
**वि+तॄ** ( ૧ લો પ )=આપવું
**विनिश्चयः** ( ન. )=નિર્ણય
**विनिद्र**=જાગતું
**विमुख**=મોં ફેરવી લીધું હોય તેવો
**विलम्बिन्**=લટકેલું
**विषयः** ( ન. )=ઉપભોગ
**वेदान्तोपगतम्**=ઉપનિષદ્‌માં કહેલું
**शिशिरीकृ**=ઠંડું પાડવું
**सदनम्** ( ના. )=ઘર
**सदय**=દયાવાળું
**सदृश** ( વિ )=સરખું
**सम** ( વિ. )=સરખું સમરસ
**समीक्ष्यकारिन्**=સમીક્ષા કરનારો
**सम्यक्** ( અ. )=બરાબર
**सरलाशयः**=જેનો આશય સરળ છે એવો
**सहस्रांशुः** ( ન. )=સૂર્ય
**सिद्धः** ( ન. )=સિદ્ધપુરુષ
**सुधामुच्**=અમૃત વર્ષાવનારું

**सुमतिः** ( न. )= સારી બુદ્ધિવાળો માણસ
**संगतम्** ( ना. )=સોબત, સંપર્ક
**संप्राप्त** ( કૃ )=આવી મળેલું
**स्नेहायमान** ( કૃ. )=સ્નેહ કરતું
**हित** ( वि. )=ફાયદાકારક
**हीनबल**=ઓછા બળવાળો

---

**उदारचरितः**=उदारम् चरितम् यस्य सः
**सरलाशयः**=सरलाः आशयाः यस्य सः
**अल्पचेताः**=अल्पं चेतः यस्य सः
**सहस्रांशुः**=सहस्रम् अंशवः यस्यः सः
**क्षीणवित्तः**=क्षीणं वित्तं यस्यः सः
**सुमतिः**=शोभना मतिः यस्य सः

**शरणागता**=शरणं आगता
**अहर्निशम्**=अहः च निशा च

---

**મનોયત્ન ૫૭:** निम्नलिखितानिविषयानुद्दिश्य पञ्च वाक्यानि लिखत ।

( अ ) सज्जनानां लक्षणानि दुर्जनलक्षणैः कथं विसंवदन्ति ?

( ब ) के जना अस्मिन् जगति परिभूयन्ते ?

( क ) शत्रुणा सह जनः कथं व्यवहरेत ?

( ड ) मनुष्येण किं कर्तव्यम् ?

( इ ) अर्थः सुखाय कल्पते ।

**મનોયત્ન ૫૮:** નીચેના સમાસોનો વિગ્રહ કરી તેમના પ્રકાર કહો:—

( अ ) लघुपतनगाम्, स्वभावसरलः, तुहिनांशुः, हीनबलः भूतिकामः.

( ब ) नवाम्बुभिः, वाङ्मनसी, पादलग्नम्, सुकृतम्, महीरुह, दवातुरः, सत्पुरुषाः वेदान्तोपगतम्, सुधामुचः, उपकारगृहीतेन, अकृत्रिमम्, माधवः, करस्थम्.

**મનોયત્ન ૫૯:** ( अ ) નીચેનાં રૂપો ઓળખો:—

उपेयुषे, भुवि, शिशिरीकृतः, अनुगन्तव्यम्, संप्राप्तम्, सुना, स्नेहायमानानि, स्पृहणीयाः, गिराम्, प्रसादतः.

( બ ) આ શ્લોકોમાં આવેલાં સતિસપ્તમીનાં ઉદાહરણો લખો. સતિ સપ્તમીના પ્રયોગને બદલે સાદી રચનામાં એ વાક્યો લખો.

**મનોયત્ન ૬૦ :** નીચેનાં ખાનાંઓમાં યોગ્ય શબ્દો મૂકોઃ—

( अ ) ( i ) सज्जनाम् वाक्——— ——— च ।

( ii ) सज्जनानाम् लक्ष्मीः ——— न ——— ।

( iii ) सज्जनाम् हृदयम् ——— चेतश्च ——— ।

( iv ) सज्जनाः दुःखिताः ——— च तुष्टा भवति ।

( v ) सज्जानाम् आचाराः ——— ——— न व्यभिचरन्ति ।

( ब ) सज्जनसंसर्गमुद्दिश्य दश वाक्यानि लिखत ।

**મનોયત્ન ૬૧ :** ( अ ) નીચેનાં વાક્યોમાં પ્રયોગ ફેરવોઃ—

( i ) अपराधसहस्राणि क्रियन्तेऽहर्निशम् मया ।

( ii ) केषां न ते वन्द्याः ।

( iii ) कतमो राजर्षिवंश आर्येणालंक्रियते ।

( ब ) મોટા અક્ષરે છાપેલા શબ્દોપર નોંધ લખોઃ—

( i ) नमस्त्रिमूर्तये तुभ्यं प्राक् **सृष्टेः केवलात्मने** । ( ii ) **विषयेष्व-**सक्तः ( iii ) **कस्तस्य पौरुषेणार्थः** ।

---

## પાઠ ૨૧ મો

### નવમો ગણ; અવ્યયીભાવ સમાસ

प्रतिदिनं गणेशस्य यथाविधि पूजां करोमि ।
पात्रेभ्यो यथाशक्ति प्रतिक्षणं दानं दीयताम् ।
जडः पुत्रो यावज्जीवं पितुः संतापकारी ।
यावज्जीवं सुखं जीवेत् ऋणं कृत्वा घृतं पिबेत् ।
शनिवासरे मया आमध्याह्नमुपवेशनं क्रियते ।
यावदवकाशं बालाः पुष्पाणां स्रजं ग्रथ्नन्तु ।
आजन्मशुद्धचरितानां महात्मनां यशो दिक्षु वितनुते ।
सर्व एवाचरन्तु यथोचितं दिवसव्यापारम् ।
किमत्र चित्रं यद्यस्मिन् कलौ यथाकालं वर्षति न पर्जन्यः

---

अनुजानीहि मां गमनाय ।
न जाने संसारः किममृतमयः किं विषमयः ।
तत्त्वं किमपि काव्यानां जानाति विरलो भुवि ।
सहवासी विजानाति सहवासीविचेष्टितम् ।
कौंतेय प्रतिजानीहि न मे भक्तः प्रणश्यति ।
मृणालानां भङ्गेऽपि तन्तवोऽनुबध्नन्ति ।
तत्ते वित्तमहं मन्ये यदश्नासि दिने दिने ।
वृद्धानां वचनं ग्राह्यमापत्काले ह्युपस्थिते ।
बालादपि ग्रहीतव्यं युक्तमुक्तं मनीषिभिः ।
न चेदन्यकार्यातिपातः, आगम्य प्रतिगृह्यतामातिथेयः सत्कारः ।
वासांसि जीर्णानि सदा विहाय नवानि गृह्णाति नरोऽपराणि ।
महता पुण्यपण्येन नराः शरीरमिदं क्रीणाति ।
अपि ज्ञायते कतमेन दिग्भागेन गतः स जाल्मः ।

प्रस्तावसदृशं वाक्यं यो जानाति स पण्डितः ।
पुण्याश्रमदर्शनेन तावदात्मानं पुनीमहे ।
विपद्विपदं संपत्संपदमनुबध्नाति ।
मा मुषाण धनं किंचित्पापं महदवाप्स्यसि ।
वृणते हि विमृश्यकारिणं गुणलब्धाः स्वयमेव संपदः ।
प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः ।
न हीश्वरव्याहृतयः कदाचित्पुष्णन्ति लोके विपरीतमर्थम् ।
काले खलु समारब्धाः फलं बध्नन्ति नीतयः ।

नाहं जानामि केयूरे नाहं जानामि कुण्डले ।
नूपुरे त्वभिजानामि नित्यं पादाभिवन्दनात् ॥
नीता येन निशा शशाङ्कधवला पद्मोदरे शारदे ।
सोऽयं भृङ्गयुवा करीरविटपे बध्नातु तुष्टिं कुतः ॥

---

| | | |
|---|---|---|
| पुष + **ना** + ति = पुष्णाति | पुष्+**नी**+तः=पुष्णीतः | पुष्+**न्**+अन्ति=पुष्णन्ति |
| क्षुभ्+**ना**+आनि = क्षुभ्नानि | क्षुभ्+**नी**+तम्=क्षुभ्नीतम् | क्षुभ+**न्**+अन्तु=क्षुभ्नन्तु |
| अक्लिश्+**ना**+स् = अक्लिश्नाः | क्लिश्+**नी**+याम्=क्लिश्नीयाम् | अजा+**न्**+अन्=अजानन् |
| जा + **ना** + मि = जानामि | मुष्+**आन** = मुषाण | जा + **नी**+हि= जानीहि |

નવમા ગણુમાં ગણુની નિશાની **ना**, **नी** અને **न्** છે. વિકારક પ્રત્યયો આગળ ધાતુને ना લગાડવામાં આવે છે. સ્વરથી શરૂ થતા અવિકારક પ્રત્યયો આગળ न् અને વ્યંજનથી શરૂ થતા અવિકારક પ્રત્યયો આગળ नी લગાડવામાં આવેછે.

આજ્ઞાર્થ બીજા પુરુષ એકવચનનો પ્રત્યય हि છે, પરંતુ જે ધાતુને છેડે વ્યંજન છે એવા ધાતુઓને ગણુની નિશાની કે हि પ્રત્યય લગાડવામાં આવતો નથી. ધાતુને માત્ર **आन** પ્રત્યય લગાડવામાં આવે છેઃ मुषाण क्षुभाण, पुषाण વગેરે.

---

( १ ) प्रतिदिनम्—दिने दिने

( २ ) यथाविधि—विधिम् अनतिक्रम्य

यथोचितम्—यथा उचितं तथा

( ३ ) यावज्जीवम्—जीवनपर्यन्तम्

( ४ ) यावदवकाशम्—यावान् अवकाशः तावान्

( ५ ) आमध्याह्नम्—मध्याह्नात् आ

---

સંસ્કૃતમાં અનુવાદ કરોઃ—

( ૧ ) આ સુંદર પુષ્પો તોડો ( वि+लू ) અને માળા ગૂંથો ( ग्रन्थ् ).
( ૨ ) દેવોએ સમુદ્રમાંથી અમૃતનું મંથન કર્યું ( मन्थ् ).
( ૩ ) તમે આ ચોપડી કેટલી કિંમતે ખરીદી ( क्री ) ?
( ૪ ) આજના જમાનામાં યુદ્ધને કોણ પસંદ કરે ( वृ ) ?
( ૫ ) તમારું શરીર દરરોજ ઘસાતું જોઈ મારું ચિત્ત ખળભળે છે ( क्षुभ्, व्याकुली भू ).
( ૬ ) મે મારું ફરનીચર ઘણી ઓછી કિંમતે વેચી નાખ્યું ( वि+क्री ).
( ૭ ) મુનિઓ જંગલમાં કંદમૂળ ખાતા હતા ( अश् ) એ શું તમે જાણતા નથી ( ज्ञा ) ?
( ૮ ) અગ્નિની પાસે મૂકેલું ઘી ઓગળી જાય ( वि+ली ) એમાં શું નવાઈ છે.
( ૯ ) રાત્રે ઝાડનાં પાન હલાવો નહીં ( धू* ).
(૧૦) ઉપવાસમાં લોકો ફળમૂળ ખાય છે ( अश् ).
(૧૧) માણસે પોતાની ઇન્દ્રિયોને કબજે કરવી જોઇએ ( नि+ग्रह् ).
(૧૨) તમને જે જે માણસો મળે તે બધાને સારી વાણીથી ખુશ કરો ( प्री ).
(૧૩) દરેક પર્વણિએ શકિતપ્રમાણે દાન કરવું જોઇએ.
(૧૪) મરણ સુધી તમારે કોઈની નિંદા કરવી નહીં.
(૧૫) ઉદ્યમ વગરનો છોકરો પિતાને જીવે ત્યાં સુધી કલેશ આપે છે ( क्लिश् ).

---

* કાળનાં રૂપો બનાવતી વખતે અંત્ય સ્વર હ્રસ્વ થાય છે

## શબ્દકોશ

**નવમા ગણના ધાતુઓ**

**अश्**=ખાવું
**क्री**=ખરીદવું
**ग्रह् [ गृह् ]**=લેવું
**प्रति+गृह्**=સ્વીકારવું
**ग्रन्थ्**=ગૂંથવું
**ज्ञा [ जा ]**=જાણવું अनु=રજા આપવી–अभि=ઓળખવું–प्रति ( आ )=વચન આપવું, માન્ય રાખવું–वि=જાણવું, સમજવું
**पुष्**=પોષવું
*__पू__=પવિત્ર કરવું
**बन्ध्**=બાંધવું, અટકાવવું, જોડવું–अनु=વળગવું, અનુસરવું, દબાણ કરવું–प्रति=અટકાવવું
**मुष्**=ચોરવું
*__वृ__=પસંદ કરવું

---

**अवाप्स्यसि**=अव+आप् નું ભવિષ્ય કાળ ૨ જો પુ. એ. વ.
**आतिथेय** (વિ.)=અતિથિ તરીકેનો
**ईश्वरः** ( ન )=સર્જન
**उपवेशनम्** ( ના. )=અપવાસ
**कतम**=કયો ( किम् નું શ્રેષ્ઠતાવાચક )
**करीरः** ( ન. )=એક વનસ્પતિ, કેરડો
**कार्यातिपातः** ( ન. )=કાર્યની અવગણના
**कुण्डलम्–लः**=કાનનું ઘરેણું
**केयूरम्–रः**=માથાનું ઘરેણું
**जालमः** ( ન. )=બદમાસ
**तत्त्वम्** ( ના. )=ખરું રહસ્ય
**तुष्टिः** ( નારી )=સંતોષ
**दिग्भागः** ( ન. )=દિશા
**नूपुरम्–रः**=પગનું ઘરેણું
**पण्यम्** ( ના. )=કિંમત
**पर्जन्यः** ( ન. )=વરસાદ
**पूज्य** ( કૃ. )=પૂજવા યોગ્ય
**प्रस्तावः** ( ન. )=સમય, તક
**भृङ्गयुवन्** ( ન. )=ભમરાનું બચ્ચું
**मनीषिन्** ( ન. )=ડાહ્યો માણસ
**मृणालः** ( ન. )=કમળનો દાંડો
**युक्त** ( વિ. )=યોગ્ય
**वासस्** ( ના )=વસ્ત્ર
**विचेष्टितम्** ( ના. )=કાર્ય
**विटपः** ( ન. )=ડાળી
**वित्तम्** ( ના. )=પૈસો
**विमृश्यकारिन्**=વિચારીને કાર્ય કરનાર
**वि+हा**=છોડી જવું
**व्यतिक्रमः** ( ન. )=ઉલ્લંઘન
**व्याहृतिः** ( નારી )=વાણી
**शारद** ( વિ )=શરદ્ ઋતુનું
**सम्+आ+रभ्** (૧ લો આ)=શરૂ કરવું

ફર્નીચર=गृहोपस्करम् | પાછળ=परोक्षम्

**મનોયત્ન ૬૨:** નીચેના સામાસિક શબ્દોનો વિગ્રહ કરોઃ—

यथाशक्ति, यथावसरम्, प्रत्यहम्, यथाकालम्, आजन्म, प्रतिक्षणम्, प्रस्तावसदृशम्, पुण्याश्रमदर्शनेन, कौंतेयः शशाङ्कधवला, पूज्यपूजाव्यतिक्रमः, संतापकारी.

**મનોયત્ન ૬૩:** (अ) નીચેનાં રૂપો ઓળખોઃ—

अनुजानीहि, प्रतिगृह्यताम्, वृणते, ग्राह्यम्, अश्नासि, व्याश्नुत, अवचिन्वाना, ग्राहिण्वति, विनिश्चिन्वन्तः, गृह्यमाणे, प्राश्य, अजानाना, कुर्वाणा, क्रियमाणायाम्.

(ब) નીચેનાં રૂપો તૈયાર કરોઃ—

વર્તમાન કાળ ત્રી. પુ. બ.:—श्रु, साध्, अश्, चि (કર્મણિ), कृ, वन्.

ભૂતકાળ પહેલો પુ. એ. વ.:—प्रति+श्रु, शक्, वि+अश्, आ+वृ (કર્મણિ), मन्, कृ, पृ.

આજ્ઞાર્થ બીજો તથા ત્રીજો પુ. એ. વ. અને ત્રીજો પુ. દ્વિ વ. તથા બ. વ.:—श्रु (કર્મણિ), तृप्, अश्, निस्+चि (आ.), कृ, तन्, क्षुभ्, धू, वि+क्री, क्लिश्.

**મનોયત્ન ૬૪:** નીચેનાં નામો કયા ધાતુ પરથી આવ્યા છેઃ—

अशनम्, वित्तरणम्, विक्रयः, धूननम्, प्रतिबन्धः, व्याहृतिः, प्रतिकाराः, आस्तरणम्, साधना, पोषणम्.

**મનોયત્ન ૬૫:** નીચેનાં ખાનાંઓમાં યોગ્ય શબ્દો મૂકોઃ—

विलिनातु, मुष्णीयाः, पुनाना, अक्षुभ्नात्, अगृह्णात्, जानन्ति;

(i) सरसि विहरन्ती दमयन्ती राजहंसमेकं ——— ।

(ii) धनवन्तः दीनवेदनाम् प्रायेण न ——— ।

(iii) परकीयस्य धनम् कदाचिदपि न ——— ।

(iv) भ्रातुर्निधनमाकर्ण्य तस्य चित्तम् ——— ।

(v) मनुष्याणां चित्तानि ——— भागीरथी अस्माभिर्वन्द्यते ।

(vi) अनेन वृत्तान्तेन युष्माकं चित्तमातपे धृतमिव ——— ।





હાડકું=अस्थि ( ના. )
આગળ=पुरतः
પાછળ=पार्श्वतः

કરડવું=दंश् [ दश् ] ( १ લો प )
ઊડી જવું=उद्+डी ( १ લો आ )
પાછળ દોડવું=अनु+धाव्

---

**મનોયત્ન ६६:** વાર્તા પૂરી કરોઃ—

कुक्कुरः अस्थि लिहति–काकौ पश्यतः—एकः पुरतः तिष्ठति अन्यश्च पार्श्वतः –एकः कुक्कुरं दशति–उड्डयते–कुक्कुरोऽनुधावति–किं करोति अन्यः ? कुक्कुरो हताशो निवर्तते–किं पश्यति ?–किं चिन्तयति ?–तात्पर्यम्.

---

## પાઠ ૨૩ મો

### સંખ્યાવાચક વિશેષણ; દ્વન્દ્વસમાસ

द्वौ पादावण्डजानाम् । द्वे शृङ्गे पशूनाम् ।
द्वे अक्षिणी मनुजानाम्, एकं तु काणस्य ।
अध्ययनमध्यापनं च द्वे कर्मणी भूदेवस्य ।
वायसानाम् द्वे नेत्रे, एका तु तारका ।
त्रीणि नेत्राणि शङ्करस्य । त्रीणि मुखानि दत्तस्य ।
ऋग्यजुःसामानीति त्रयो वेदाः । चत्वारो वेदा इत्येके मन्यन्ते ।
दशरथस्य तिस्रो दारा आसन् ।
चत्वारः पादाः पशूनाम् ।
चत्वारि मुखानि ब्रह्मणः ।
पूर्वपश्चिमदक्षिणोत्तराः चतस्रो दिशः ।
आर्याणां चत्वारो वर्णा चत्वारश्चाश्रमा आसन् ।
चतुर्षु वर्णेषु ब्राह्मणो श्रेष्ठः । चतुर्णामाश्रमाणां गृहस्थाश्रमः श्रेष्ठः ।
पञ्च आयुधानि कामदेवस्य । पञ्च अङ्गुल्यः हस्तस्य ।
पञ्चभिः पाण्डवैः द्रौपदी परिणीता ।
कामः क्रोधो मदो लोभो मोहो मत्सरश्चेति षड् विकाराः ।
षण्णामृतूनामयं क्रमः—हेमन्तः शिशिरो वसन्तो ग्रीष्मो वर्षा शरच्च ।
लवणं तिक्तं कटु मधुरमम्लं कषायं चैभिः षड्भीरसैर्भोजनं स्वदते ।
दश आननानि रावणस्य ।
सप्तभिस्तुरगैः सूर्यस्य रथ उह्यते ।
अष्टाभिरङ्गैर्यत्प्रणामः क्रियते स साष्टाङ्गप्रणाम उच्यते ।
नवभिः तन्तुभिर्युक्तं द्विजानामुपवीतं पुण्यदम् ।
सप्त ऋषयो, ऽष्टौ वसव, एकादश रुद्रा, द्वादश आदित्या आर्याणां पुराणे प्रसिद्धाः ।
अष्टादश पुराणानि व्यासेन रचितानि ।

---

आहारनिद्राभयं नराणां पशुभिः सामान्यम् ।
शिशिरे प्रत्यूषसि प्रातःकर्मणि न मे पाणिपादम् प्रसरति ।
अहिनकुलस्य युद्धम् बालानां प्रीतये भवति ।
मांसशोणितेन निर्मितेऽस्मिन् देहे कथं तव एतादृशी स्पृहा ।
अपि क्रियार्थं सुलभं समित्कुशं जलान्यपि स्नानविधिक्षमाणि ते ।
हस्तपादसमोपेतोऽपि त्वम् कथं गृहं न कुरुषे ।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ।
को नाम श्वशुरमन्दिरे श्वशुराभ्याम् न पूज्यते ।

---

પ્રથમ પુસ્તકમાં આપણે જોયું કે સંસ્કૃતમાં વિશેષ્યને અનુસરી વિશેષણ જાતિ, વચન અને વિભક્તિના પ્રત્યયો લે છે. આ નિયમ ગુણવાચક વિશેષણને સર્વથા લાગુ પડે છે, પણ સંખ્યાવાચક વિશેષણને અમુક અંશેજ લાગુ પડે છે. પહેલી ચાર સંખ્યા બતાવનારા વિશેષણોનો ઉપયોગ આ નિયમને અનુસરીને કરવામાં આવે છે.

**एक=એક (હમેશાં એકવચનમાં)**

| | નરજાતિ | નારીજાતિ | નાન્યતરજાતિ |
|---|---|---|---|
| પ્રથમા | एकः | एका | एकम् |
| દ્વિતીયા | एकम् | एकाम् | एकम् |
| તૃતીયા | एकेन | एकया | एकेन |
| ચતુર્થી | एकस्मै | एकस्यै | एकस्मै |
| પંચમી | एकस्मात् | एकस्याः | एकस्मात् |
| ષષ્ઠી | एकस्य | एकस्याः | एकस्य |
| સપ્તમી | एकस्मिन् | एकस्याम् | एकस्मिन् |

કેવળ, કેટલાક, મુખ્ય, વગેરે અર્થોમાં एक ત્રણે વચનમાં વપરાય છે, અને તેનાં બીજાં રૂપો सर्व પ્રમાણે થાય છે.

### द्वि=બે ( હમેશાં દ્વિવચનમાં )

| | | | |
|---|---|---|---|
| પ્રથમા | द्वौ | द्वे | द्वे |
| દ્વિતીયા | द्वौ | द्वे | द्वे |
| તૃતીયા | द्वाभ्याम् | द्वाभ्याम् | द्वाभ्याम् |
| ચતુર્થી | द्वाभ्याम् | द्वाभ्याम् | द्वाभ्याम् |
| પંચમી | द्वाभ्याम् | द्वाभ्याम् | द्वाभ्याम् |
| ષષ્ઠી | द्वयोः | द्वयोः | द्वयोः |
| સપ્તમી | द्वयोः | द्वयोः | द्वयोः |

### त्रि=ત્રણ ( હમેશાં બહુવચનમાં )

| | | | |
|---|---|---|---|
| પ્રથમા | त्रयः | तिस्रः | त्रीणि |
| દ્વિતીયા | त्रीन् | तिस्रः | त्रीणि |
| તૃતીયા | त्रिभिः | तिसृभिः | त्रिभिः |
| ચતુર્થી | त्रिभ्यः | तिसृभ्यः | त्रिभ्यः |
| પંચમી | त्रिभ्यः | तिसृभ्यः | त्रिभ्यः |
| ષષ્ઠી | त्रयाणाम् | तिसृणाम् | त्रयाणाम् |
| સપ્તમી | त्रिषु | तिसृषु | त्रिषु |

### चतुर=ચાર ( હમેશાં બહુવચનમાં )

| | | | |
|---|---|---|---|
| પ્રથમા | चत्वारः | चतस्रः | चत्वारि |
| દ્વિતીયા | चतुरः | चतस्रः | चत्वारि |
| તૃતીયા | चतुर्भिः | चतसृभिः | चतुर्भिः |
| ચતુર્થી | चतुर्भ्यः | चतसृभ्यः | चतुर्भ्यः |
| પંચમી | चतुर्भ्यः | चतसृभ्यः | चतुर्भ्यः |
| ષષ્ઠી | चतुर्णाम् | चतसृणाम् | चतुर्णाम् |
| સપ્તમી | चतुर्षु | चतसृषु | चतुर्षु |

પાંચથી ઓગણીસ સુધીનાં વિશેષણો વિશેષ્યની જાતિ પ્રમાણે બદલાતાં નથી. વિશેષ્ય ગમે તે જાતિનું હોય છતાં આ વિશેષણોનાં રૂપો એકજ

રહે છે, એટલે કે વિશેષ્ય સાથે માત્ર વચન અને વિભક્તિનો સમન્વય જાળવે છે. પાંચથી ઓગણીસ સુધીનાં વિશેષણો સંસ્કૃતમાં નીચે પ્રમાણે છે.

पञ्चन्, षष्, सप्तन्, अष्टन्, नवन्, दशन्, एकादशन्, द्वादशन्, त्रयोदशन्, चतुर्दशन्, पञ्चदशन्, षोडशन्, सप्तदशन्, अष्टादशन्, नवदशन्.

| | | | |
|---|---|---|---|
| પ્રથમા | पञ्च | षट्-ड् | अष्ट-अष्टौ |
| દ્વિતીયા | पञ्च | षट्-ड् | अष्ट-अष्टौ |
| તૃતીયા | पञ्चभिः | षड्भिः | अष्टभिः-अष्टाभिः |
| ચતુર્થી | पञ्चभ्यः | षड्भ्यः | अष्टभ्यः-अष्टाभ्यः |
| પંચમી | पञ्चभ्यः | षड्भ्यः | अष्टभ्यः-अष्टाभ्यः |
| ષષ્ઠી | पञ्चानाम् | षण्णाम् | अष्टानाम् |
| સપ્તમી | पञ्चसु | षट्सु | अष्टसु-अष्टासु |

બીજાં વિશેષણોનાં રૂપો पञ्चन् પ્રમાણે થાય છે.

---

द्वन्द्व સમાસમાં જોડાતા શબ્દો એકત્રિત થઈ જ્યારે એકજ વિચાર દર્શાવે, અગર જ્યારે આખો સમાસ જથ્થાનો ભાવ સૂચવે ત્યારે સમાસને **समाहारद्वन्द्व** કહેવામાં આવે છે. **આ સમાસ હમેશાં નાન્યતરજાતિમાં અને એકવચનમાંજ વપરાય છે.**

સાધારણ રીતે द्वन्द्व સમાસમાં જોડાતા શબ્દો ( i ) શરીરનાં કોઈ અંગ સૂચક શબ્દો હોય, ( ii ) લશ્કરનાં જુદાં જુદાં અંગો સૂચક શબ્દો હોય, ( iii ) નદીનાં જુદી જાતિનાં નામો હોય, ( iv ) જીવડાં અને નાનાં પ્રાણીઓનાં નામો હોય કે ( v ) કુદરતી રીતે વૈમનસ્ય ધરાવનારાં પ્રાણીઓનાં નામો હોય, ત્યારે समाहारद्वन्द्व સમાસ બને છે. हस्त्यश्वरथम्, गङ्गाशोणम्, यूकालिक्षम. આ સમાસનો વિગ્રહ નીચે પ્રમાણે થાય છે.

हस्तौ च पादौ च एतेषां समाहारः । मांसं च शोणितं च एतयोः समाहारः ।

કેટલીકવાર द्वन्द्व સમાસમાં જોડાતા બે શબ્દો પૈકી એકને કાયમ રાખી બીજાને ઉડાવી મૂકવામાં આવે છે. આવા સમાસને **एकशेषद्वन्द्व** કહેવામાં આવે છે. સાધારણ રીતે આવા સમાસો નર અને માદા સૂચક શબ્દોનાજ બને છે, અને તેમાં માદા સૂચક શબ્દ ઉડાવી મૂકવામાં આવે છે. જેમકે पितरौ–माता च पिता च । श्वशुरौ–श्वश्रूः च श्वशुरः च. એજ પ્રમાણે हंसौ, पुत्रौ, भ्रातरौ વગેરે સમાસો બને છે.

---

સંસ્કૃતમાં ભાષાંતર કરો:—

(૧) પાણ્ડુને બે પત્ની હતી.

(૨) માદ્રીના બે દીકરા કુન્તીના ત્રણ દીકરા સાથે સંપથી રહ્યા.

(૩) દશે દિશામાં સજ્જનોની કીર્તિ ફેલાય છે.

(૪) ગરીબ, રોગી અને સેવક એ ત્રણ જીવતાં છતાં મરેલા છે.

(૫) દશરથને ત્રણ રાણીઓ હતી, પરંતુ રામને એકજ પત્ની હતી.

(૬) મેં ચાર પક્ષીઓ ઝાડ પર બેઠેલાં જોયાં.

(૭) ત્રણ વેદોનો અભ્યાસ ચારે દિશામાં વખણાય છે.

(૮) પાણ્ડુને પાંચ પુત્રો હતા; દ્રૌપદી પાંચ પતિને વરી ( वृ ).

(૯) તમારાં નવ પુસ્તકોમાંથી મને સાત આપો.

(૧૦) દર મહિને હું ત્રણ પુસ્તકો ખરીદું છું.

(૧૧) તેણે મને ચાર વાર્તા કહી, પણ એમાંની બે નીરસ હતી.

(૧૨) મારા ભાઇનો પગાર ૧૫ રૂપિયા છે.

(૧૩) કાલિદાસના ત્રણ નાટકોમાં મને શાકુન્તલ ગમે છે, અને એના ચાર કાવ્યોમાં મને રઘુવંશ પ્રિય છે.

(૧૪) રઘુવંશના ઓગણીસ સર્ગમાંથી તમે કેટલા વાંચ્યા છે ?

(૧૫) રામ ચૌદ વરસ વનમાં રહ્યા.

---

## શબ્દકોશ

**अध्ययनम्** ( ના. )=અભ્યાસ
**अध्यापनम्** ( ના. )=શિખવાડવું તે
**अम्ल** ( વિ. )=ખાટું
**अहिः** ( ન. )=સાપ
**आननम्** ( ના. )=મોઢું
**उपवीतम्** ( ના. )=જનોઈ
**कटु** ( વિ. )=કડવું
**काण** ( વિ. )=કાણો
**कुशम्** ( ના. )=દર્ભ
**तन्तुः** ( ન. )=તાંતણો
**तारका** ( નારી )=આંખની કીકી
**दत्तः** ( ન. )=દત્તભગવાન
**दाराः** ( ન. )=પત્ની ( હમેશાં બહુ-વચનમાં વપરાય છે )
**द्विजः** ( ન )=બ્રાહ્મણ, પક્ષી
**नकुलः** ( ન. )=નોળિયો
**पाणिः** ( ન. )=હાથ
**पुण्यद** ( વિ. )=પુણ્યદાયક
**भूदेवः** ( ન. )=બ્રાહ્મણ
**मनुजः** ( ન. )=માણસ
**यजुस्** ( ના. )=યજુર્વેદ
**वसुः** ( ન. )=વસુ
**शृङ्गम्** ( ના )=શિંગડું, શિખર
**समापेत** ( વિ. )=સંપૂર્ણ
**सामन्** ( ના. )=સામવેદ

---

સંપથી=**सहत्या**
પગાર=**वेतनम्**
સર્ગ=**सर्गः**

---

**મનોયત્ન ૬૭:** નીચે આપેલા ૯-૯ સમાસોને તેના ત્રણ પ્રકારમાં જુદા પાડો.

जायापती, पुच्छलाङ्गूलम्, आद्यवसाने, भ्रातरौ, अजव्याघ्रम्, हरिहरौ, वाक्त्वचम्, छत्रोपानहम्, वाङ्मनसी, दधिपयसी, पार्वतीपरमेश्वरौ.

**મનોયત્ન ૬૮:** નીચેના સમાસોનો વિગ્રહ કરો અને તેના પ્રકાર કહો:

पूर्वाह्णः, आयाधिकम्, चराचरोपजीव्यम्, घनदशापेन, दुश्चरम्, प्रस्वेदपीडिताः, अनुद्योगेन, किंप्रभुः

સંધિ કરો:—

तत्+ज्ञातुम्; अवध्यत्वात्+मुच्यताम्, यत्+शक्यम्; कुर्यात्+न, कुर्वन्+अपि, यावत्+च, स्थानात्+श्चनापि, यावत्+न+उदयते, करोति+एव, वारिदात्+इतरः

---

# પુનરાવર્તન

## પ્રશ્નપત્ર ૩ જો

૧. ગુજરાતીમાં અનુવાદ કરોઃ—

(i) श्रेयःसु गुरुवद्वृत्तिं नित्यमेव समाचरेत् ।

(ii) **तृषार्तो** दुःखमाप्नोति परत्रेह च मानवः ।

(iii) प्रोक्तं **श्रद्धाविहीनस्य अरण्यरुदितोपमम्** ।

(iv) वन्दे विष्णुं **भवभयहरं सर्वलोकैकनाथम्** ।

(v) कालक्रमेण जगति परिवर्तमाना चक्रारपङ्क्तिरिव गच्छति भाग्यपङ्क्तिः ।

(vi) अज्ञः सुखमाराध्यः, सुखतरमाराध्यते **विशेषज्ञः** ।

(vii) आवेष्टितं **महासर्पैश्चन्दनं** न विषायते ।

(viii) स्वशक्त्या कर्म कुर्वाणो न चेत्सिद्धिमवाप्नुयात् ।
यतितव्यं पुनस्तेन विषादो नोपकारकः ॥

(ix) प्राकाश्यं स्वगुणोदयेन गुणिनो गच्छन्ति, किं जन्मना ।

(x) विषादप्यमृतं ग्राह्यम् सुधिया **नीचजनाद**पि ।

૨. સવાલ ૧ માં (अ) મોટા અક્ષરે છાપેલા સમાસોનો વિગ્રહ કરી પ્રકાર કહો.

(ब) નીચે લીટી દોરેલાં રૂપો ઓળખો.

૩. નીચેનાં વાક્યો સૂચવ્યા પ્રમાણે લખોઃ—

(i) मानो हि महतां धनम् । ( मानः તૃતીયામાં વાપરો )

(ii) सुहृदपि न याच्यः कृशधनः । ( પ્રયોગ ફેરવો )

(iii) अस्य पुष्पस्य रूपं मम प्रीतये न भवति । ( ममને ચોથીમાં વાપરો )

(iv) भारतवर्षे कोऽपि राजा आसीत् । स प्रजाः प्रजा इवापालयत् । तस्याभिधानं दशरथ आसीत् । सोऽतीव धार्मिकः संयमी चासीत् । ( એક વાક્ય બનાવો )

(v) मम मित्रस्य ——— अधुना ——— अत्यजत् ( दारः અને प्राणः શબ્દો વાપરો )

(vi) धर्मः कामः सुखं च सुगृहिणीप्रभावात् ——— । ( વાક્ય પૂરું કરો )

૪. ( अ ) નીચેનાં નામો કયા ધાતુપરથી આવ્યા છે તે લખો:—

अनुग्रहः, संचयः, अभिज्ञानम्, तिरस्कारः, ज्वलनः, क्लेशः, अनुकरणम्.

( ब ) નીચેના શબ્દોનું નારીજાતિનું અંગ આપો:—

मानुष, दारकः, सेवकः सुन्दर, शूकः, कोकिलः, बकः, श्वन्, तरुण, वरः

૫. નીચે આપેલી વિગતો પરથી સંસ્કૃતમાં એક વાર્તા લખો:—

मार्जारेण त्रासिताः मूषकाः—सभायामेकत्रीभूताः—दुःखनिवेदनम्—मार्जारस्य कण्ठे घण्टाबन्धनम् सूचितम्—हर्षिताः सर्वे—को घण्टाबन्धने आत्मानं नियोजयेत्—विचारग्रस्ताः सर्वे—मार्जारस्यागमनम्—मूषकाणां धावनमुत्पतनं च । **અથવા**

काकस्य वैदग्ध्यं सूचयन्तीं कामपि कथां लिखत ।

૬. ( अ ) તફાવત સમજાવો:—( i ) अर्कायत–अक्रियत; ( ii ) महासेवा–महत्सेवा; ( iii ) राजन्या–राज्ञी.

( ब ) સંધિ કરો:—अमात्यान्+च, हसन्+न, महान्+जीर्णः, अतुप्यत्+च मत्+रक्षणम्.

( क ) કૌંસમાં આપેલા શબ્દો યોગ્ય વિભક્તિમાં વાપરો:—

( i ) ———— कर्म अतिरिच्यते । ( वाच् )

( ii ) दशरथस्य ——— राज्ञः ———— च पुत्रा आसन् । ( त्रि, चतुर् )

( iii ) ———— ———— बाला अविनयमाचरन्ति (आचार्य, प्र+ईक्ष्)

૭. સંસ્કૃતમાં ભાષાંતર કરો:—

એક ઘરમાં બે બિલાડા રહેતા હતા. એક દિવસે તેમને એક પૂડો મળ્યો. તેઓ માંહેમાંહે લડવા લાગ્યા. તેઓએ એક વાંદરાને જોયો. તેઓ બંને તેની પાસે ગયા, અને તેમના કલહનો અંત લાવવા ( प्रशमय् ) કહ્યું. વાંદરો ત્રાજવું લાવ્યો. પછી તેણે પૂડાના બે ભાગ કર્યા ( द्विधा वि+भज् ) જ્યારે એક વજનમાં વધતો ( भारपरिमाणेन गुरुतर ) જણાતો ત્યારે તે તેમાંથી એક મોટું બચકું ભરતો ( दन्तैः महाखण्डम् सं+दंश् ). એમ કરીને તે લગભગ આખો પૂડો ખાઈ ગયો. જે બાકી રહ્યું તે તેણે પોતાના મહેનતાણા તરીકે લઈ લીધું. બંને ભૂખા બિલાડા નિરાશ વદને પાછા ફર્યા.

———: o :———

## પાઠ ૨૪ મો

# आगच्छ मूर्खराज

एकदा राजा भोज आत्मनः शुद्धान्तमगच्छत् । तत्र तस्य महिष्यात्मनः प्रियसख्या रहसि संभाषमाणासीत् । भोजमनाहूतं तत्रागतं दृष्ट्वा विनोदोक्त्योक्तवती राज्ञी । आगच्छ मूर्खराजेति । अनेन विस्मितो भूपालो न किञ्चिदुक्तवान् किन्तु तूष्णीमपासरत् । अन्येद्युः स पण्डितानमात्यांश्च सभायामाह्वयत् । आत्मानं द्वारि स्थापयित्वा यावदेकैक आगच्छत् तावत् स आगच्छ मूर्खराजेति तं स्वागतं व्याहरत् । कविकुलगुरुः कालिदासोऽपि यावदागतस्तावदेभिर्वचनैरभिनन्दितः । किन्तु प्रत्युत्पन्नमतिना तेन राजा पृष्टः

खादन् न गच्छामि हसन्न जल्पे
गतं न शोचामि कृतं न मन्ये ।
द्वाभ्यां तृतीयो न भवामि राजन्
किं कारणं भोज भवामि मूर्खः ॥

सपद्येव राजा महिष्या नर्मभाषितं सम्यग्गृहीतवान् अतुष्यच्च ।

### શબ્દકોશ

अन्येद्युः ( અ. )=બીજે દીવસે
अप+सृ ( ૧ લો પ )=ખસી જવું, ચાલી જવું
अमात्यः ( न. )=પ્રધાન
एकैकः=એક પછી એક
नर्मभाषितम् ( ના. )=મશ્કરી
प्रत्युत्पन्नमतिः=હાજરજવાબી
महिषी ( નારી )=પટરાણી
रहस् ( ના. )=એકાંત
विनोदोक्तिः ( નારી ) = મશ્કરી
शुद्धान्तः ( न. )=ઝનાનો
सपद्येव ( અ. )=તરતજ
सं+भाष् ( ૧ લો आ )=વાત કરવી
सम्यक् ( અ. )=સારી રીતે
स्वागतं वि+आ+हृ=સ્વાગત કરવું

## પાઠ ૨૫ મો

## जाबालेराश्रमम्




अस्ति विन्ध्याटव्यां पम्पाभिधानं सरः । तस्यैव पद्मसरसः पश्चिमे तीरे महाजीर्णः शाल्मली वृक्षः । तत्र नानादेशेभ्यः समागतानि शुककुलानि प्रतिवसन्ति स्म । एकस्मिंश्च जीर्णकोटरे जायया सह निवसतः, पश्चिमे वयसि वर्तमानस्य, कथमपि पितुरहमेकः सूनुरभवम् । मम जायमानस्य प्रसववेदनया जननी मे परलोकं गता । एकदा प्रत्यूषसि तस्मिन्महावनेऽभिमुखमापतदनेकसहस्रसंख्यं शवरसैन्यमपश्यम् । तस्मात्पुलिन्दवृन्दादेकः शवरस्तम् पादपमारुह्य, शाखान्तरेभ्यः शुकशावकान् गृहीत्वा, अपगतासूंश्च तान्कृत्वा, क्षितावपातयत् । मद्रक्षणाकुलं मे जनकमपि स गतासुं कृतवान् । तदनन्तरं शुकशिशून् समाहृत्य सः शवरः सेनापतिगतेनैव वर्त्मनागच्छत् । मां तु बलवती पिपासा परवशमकरोत् । कथमप्यहं पद्मसरः प्राप्नवम् । स्नानार्थं तत्रोपगतो हारीतनामा मुनिकुमारो मृतकल्पम् माम् गृहीत्वा अभिषेकावसाने तपोवनाभिमुखं शनैरगच्छत् । अनतिदूरं गत्वातिरमणीयमाश्रममपश्यम् ।

तस्य च मध्यभागमलंकुर्वाणस्य रक्ताशोकतरोरधच्छायायामुपविष्टं भगवन्तं जाबालिमपश्यम् । अवलोक्य च तमहमचिन्तयम् । अहो प्रभावस्तपसाम् । पुण्यानि हि नामग्रहणान्यपि महामुनीनाम् । किं पुनो दर्शनानि । धन्यमिदमाश्रमपदं यत्राधिपतिरयमृषिसत्तमः । एषः प्रवाहः करुणारसस्य, संतरणसेतुः संसारसिन्धोः, सागरः संतोषामृतस्योपदेष्टा सिद्धिमार्गस्य, वडवानलो लोभार्णवस्य, महामन्त्रः क्रोधभुजङ्गमस्य, दिवसकरो मोहान्धकारस्य, आयतनं मङ्गलानाम्, अभूमिर्मदविकाराणाम्, उत्पत्तिः साधुतायाः, सखा सत्यस्य, प्रभवः पुण्यसंचयस्य, अदत्तावकाशो मत्सरस्य, अरातिर्विपत्तेः, अननुकूलोऽभिमानस्य, अवशो विषयाणामनभिमुखः सुखानाम्। अस्य ऋषेः प्रसादादेव अपगतमत्सरं तपोवनम् । अत्र हि शाश्वातिकं विरोधमपहाय विहगा अपि तपोवनवसतिसुखमनुभवन्ति । अहो प्रभावो महात्मनामिति ।

—*Adapted from* कादम्बरी

---

संसारसिन्धुः— संसारः एव सिन्धुः
संतोषामृतम्ः— संतोषः एव अमृतम्
लोभार्णवः — लोभः एव अर्णवः
क्रोधभुजङ्गमः— क्रोधः एव भुजङ्गमः
मोहान्धकारः— मोहः एव अन्धकारः

ઉપરના દાખલાઓમાં ઉપમેય અને ઉપમાન* એ સમાસનાં બે પદો છે. આ બે પદોમાં પહેલું પદ ઉપમેય છે અને બીજું પદ ઉપમાન છે. આવાં બે પદો ભેગાં મળી જે સમાસ બને તે **कर्मधारय** સમાસ છે. આ સમાસનો વિગ્રહ કરતી વખતે **इव** કે **एव** નો ઉપયોગ કરવામાં આવે છે.

* ઉપમામાં જેને સરખાવવામાં આવે તે ઉપમેય કહેવાય છે, અને જેની સાથે સરખાવવામાં આવે તે ઉપમાન કહેવાય છે. આ માણસ તાડ જેવો ઊંચો છે: આ ડગલો સફેદ દૂધ જેવો છે. આમાં માણસ અને ડગલો ઉપમેય છે, અને તાડ તથા દૂધ ઉપમાન છે.

**एव** ઉપમેયની પછી મૂકાય છે અને **इव** ઉપમાનની પછી મૂકાય છે. જો રૂપક હોય તો **एव** વપરાય છે અને ઉપમા હોય તો **इव** વપરાય છે.

## શબ્દકોશ

**अदत्तावकाशः**=જ્યાં અવકાશ આપવામાં આવ્યો નથી એવું
**अनन्तरम्** ( અ. )=પછી
**अप+हा**=દૂર કરવું
**अभिमुखम्** ( અ. )=તરફ, સામું
**अभिषेकः** ( ન. )=સ્નાન
**अर्णवः** ( ન. )=સમુદ્ર
**अरातिः** ( ન. )=દુશ્મન
**अलं+कृ**=શણગારવું
**अवसानम्** ( ના. )=અંત, નાશ
**आयतनम्** ( ના. )=સ્થાન
**उपदेष्टृ** ( ન. )=ઉપદેશ આપનાર
**कथमपि** ( અ. )=મહામુસીબતે
**कोटरः** ( ન. )=બખોલ
**जाबालिः** ( ન. )=મુનિનું નામ
**जाया** ( નારી )=સ્ત્રી
**दिवसकरः** ( ન. )=સૂર્ય
**नाना** ( વિ. )=વિધવિધ
**पश्चिमे वयसि वृत**=ઘરડા હોવું
**पातय्**=પાડવું, ફેંકવું
**पादपः** ( ન. )=ઝાડ
**प्र+आप्** ( ૫ મો ગ )=પહોંચવું
**भुजङ्गमः** ( ન. )=સાપ
**मृतकल्प** ( વિ. )=અધમૂઓ
**वडवानलः** ( ન. )=સમુદ્રમાં છૂપાયેલો ભયંકર અગ્નિ
**वर्त्मन्** ( ના. )=રસ્તો
**विन्ध्याटवी** ( નારી )=વિન્ધ્યારણ્ય
**शनैः** ( અ. )=ધીમે ધીમે
**शबरः** ( ન. )=મ્લેચ્છ पुलिन्दः
**शाल्मली** ( ન. )=સમડીનું ઝાડ
**शावकः** ( ન. )=બચ્ચું
**शाश्वतिक** ( વિ. ) શાશ્વત, હમેશ[ાં]
**सम+आ+हृ**=એકઠું કરવું
**संतरणम्** ( ના. )=તરી જવું તે
**सूनुः**=( ન. )=છોકરો
**संतुः** ( ન. )=પુલ

**મનોયત્ન ૬૯ :**

अयं मुनिः ———। मनुजान् स ——— उपदिशति ——— च तारयति। नराणाम् ——— दहति ——— च नियच्छति। सः मनुष्याणाम् ——— दूरीकरोति ——— च आतनोति। अस्मिन् ——— ——— च न लक्ष्यन्ते ——— च व्यक्तीभवति। अस्य——— प्रियम् अयम् ——— अरातिः ——— च निधिः। અથવા મુનિને જોઇને પોપટને જે વિચારો આવ્યા તે સંસ્કૃતમાં લખો.

# પાઠ ૨૬ મો

## वनोद्यतां सीतां रामोऽनुनयति

सान्त्वयित्वा पुनः सीतां बाष्पपर्याकुलेक्षणाम् ।
निवर्तनार्थे धर्मात्मा वाक्यमेतदभाषत ॥ १ ॥

सीते महाकुलीनासि धर्मे च निरता सदा ।
इहाचरस्व धर्मं त्वं यथा मे मनसः सुखम् ॥ २ ॥

सीते विमुच्यतामेषा वनवासकृता मतिः ।
वने दोषा हि बहवो वदतस्तान्निबोध मे ॥ ३ ॥

हितबुद्धया खलु वचो मयैतदभिधीयते ।
सदा सुखं न जानामि दुःखमेव सदा वनम् ॥ ४ ॥

कायक्लेशा हि बहवो भयानि विविधानि च ।
जटाभारश्च कर्तव्यो वल्कलाम्बरधारिणा ॥ ५ ॥

अहोरात्रं च संतोषः कर्तव्यः स्वयमाहृतैः ।
फलैर्वृक्षावपतितैः, सीते दुःखमतो वनम् ॥ ६ ॥

उपवासश्च कर्तव्यः, कर्तव्यं विधिपूर्वकम् ।
प्राप्तानामतिथीनां नित्यशः प्रतिपूजनम् ॥ ७ ॥

सुप्यते पर्णशय्यासु रात्रिषु मशकैः सह ।
लताकण्टकसंकीर्णा मार्गा, दुःखमतो वनम् ॥ ८ ॥

सग्राहाः सरितश्चैव, गिरिकन्दरवासिनाम् ।
सिंहानां निनदा दुःखाः श्रोतुं, दुःखमतो वनम् ॥ ९ ॥

क्रोधलोभौ विमोक्तव्यौ कर्तव्या तपसे मतिः ।
न भेतव्यं च भेतव्ये नित्यं, दुःखमतो वनम् ॥ १० ॥

तदलं ते वनं गत्वा क्षमं न हि वनं तव ।
विमृशन्निह पश्यामि बहुदोषकरं वनम् ॥ ११ ॥

—*Adapted from* रामायणम्

## શબ્દકોશ

**ईक्षणम्** ( ના. )=આંખ
**कन्दरम्** ( ના. )=ગુફા
**ग्राहः** ( ન. )=મગર
**निनदः** ( ન. )=અવાજ
**नि+बुध्**=સાંભળવું, ધ્યાન આપવું
**निरत** ( કૃ. )=મશગૂલ
**निर्वतनम्** ( ના. )=પાછા ફરવું તે
**पर्याकुल** ( વિ. )=ડહોવાયલી
**प्रतिपूजनम्** ( ના. )=પૂજા
**बाष्प** ( ના. )=આંસું
**मशकः** ( ન. )=મચ્છર
**वल्कलाम्बरम्** ( ના. ) = ઝાડની છાલનાં વસ્ત્ર
**वि+मृश्** ( ૬ થો પ )=વિચારવું
**सं+कृ** ( ૬ થો પ )=એકઠું કરવું
**सुप्**=સુવું

**મનોયત્ન ૭૦ :** ( अ ) નીચેનાં રૂપો ઓળખોઃ—

निवसतः, आलोक्य, वर्त्मना, जायमानस्य, अलंकुर्वाणस्य, अनाहूतम्, उक्तवती, अभिधीयते, विमोक्तव्यौ, प्राप्तानाम्, भेतव्यम्.

( ब ) મોટા અક્ષરે છાપેલા શબ્દોપર નોંધ લખોઃ—

( i ) न भेतव्यं च **भेतव्ये** । ( ii ) तदलं ते वनं **गत्वा** ( iii ) क्षमं न हि वनं **तव** ।

**મનોયત્ન ૭૧ :** रामेण अभिहितानि वनदुःखानि समासेन कथ्यन्ताम् ।

**મનોયત્ન ૭૨ :** નીચેના સમાસોનો વિગ્રહ કરો અને તેના પ્રકાર કહો : —

वल्कलाम्बरधारिणा, परलोकम्, क्रोधलोभौ, अहोरात्रम्, वृक्षावपतितैः, लताकण्टकसंकीर्णाः, पम्पाभिधानम्, सेनापतिगतेन, प्रियसख्या अपगतासून्, ऋषिसत्तमः, अपगतमत्सरम्, मृतकल्पः, बाष्पपर्याकुलेक्षणाम्, वनवासकृता, पर्णशय्यासु हारीतनामा, नानादेशेभ्यः, रक्षणाकुलः, महावने.

## પાઠ ૨૭ મો.

### બીજો ગણ

सर्वः सगन्धेषु विश्वसिति ।
उदेति पूर्वं कुसुमं ततः फलम् ।
कोपाद्वा कार्यहेतोर्वा न ब्रूयादनृतं वचः ।
कवीन्दुं नौमि वाल्मीकिम् ।
आचारः कुलमाख्याति ।
अनिषण्णे गुरौ नासीत ।
भगवती वसुंधरा सीतामसूत ।
न द्रिः कदलीफलानि प्रसूते ।
अनवाप्तेषु कामेषु मृत्युरभ्येति मानवम् ।
एति जीवन्तमानन्दो नरं वर्षशतैरपि ।
प्राणिनामुपकाराय प्राणिति सुजनो सदा
स्मितेनांतर्गतं मनोऽपह्नुते शठः ।
शेषे धराभराक्रान्ते शेते नारायणः सुखम् ।
न पापं प्रति पापः स्यात्, साधुरेव सदा भवेत् ।
निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु, न्याय्यात्पथः प्रविचलन्ति पदं न धीराः ।
कल्पद्रुमः कल्पितमेव सूते, सतां हि सङ्गः सकलं प्रसूते ।
सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् ।
आस्ते भग आसीनस्योर्ध्वं तिष्ठति तिष्ठतः ।
शाखायां सुखमासीनः सलीलं विध्यते खगः ।
सुकुमारं मधौ पत्रं तरोः स्यात्, कठिनं शुचौ ।
राधेयो जामदग्न्येः शस्त्रविद्यामध्यैत, कुशलवौ आदिकवेरध्यैयाताम्, पाण्डवाश्च द्रोणादध्यैयत ।
हरो हिमालये शेते हरिरधिशेते महोदधिम् ।
मम जननी भाद्रपदस्य शुक्लपक्षे नवम्यां सोमवासरे प्रत्यूषसि मां प्रासूत ।

ते जन्मभाजः खलु जीवलोके येषां मुखं स्तौति गुणान्विदुषाम् ।
चाणक्यः धाम्ना सहस्रधामानमप्यतिशेते ।
रूपेण मदनमप्यतिशेते[१४]ऽयं बालः ।
स्तुवन्नपेक्षते प्रायः स्तूयमानात्प्रतिस्तवम् ।
अप्राप्तकालवचनं ब्रुवन् बृहस्पतिरपि अवज्ञानमपमानं च शाश्वतं प्राप्नोति ।
विधाय वैरं सामर्षे नरोऽरौ न उदासीत ।
क्षणे क्षणे यन्नवतामुपैति, तदेव रूपं रमणीयतायाः ।
मन्दोऽप्यमन्दतामेति संसर्गेण विपश्चितः ।
सोद्योगं नरमायान्ति विवशाः सर्वसंपदः ।

---

**નિયમ ૧૪ :**—अति+शी ( ચડી જવું,' 'ના કરતાં સારૂં હોવું ') ધાતુ સાથે જે ગુણમાં ચડિયાતાપણું બતાવવું હોય તે ગુણને ત્રીજી વિભક્તિમાં મૂકવામાં આવે છે.

---

| | | |
|---|---|---|
| या + सि – यासि | अ + या + अन् = अयान् | वगेरे. |
| अ + या + त = अयात | + उस् = अयुः[१] | |
| इ + अन्ति = य् + अन्ति = यन्ति | इ + मि = एमि | |
| आ + इ + अम् = ऐ + अम् = आयम् | इ + सि = एषि | वगेरे. |

બીજા ગણના ધાતુઓને ગણની નિશાની લગાડવામાં આવતી નથી, પણ ધાતુને તરતજ કાળના પ્રત્યયો લગાડવામાં આવે છે.

| | | |
|---|---|---|
| वच् + ति = वक् + ति = वक्ति | वच् + सि = वक् + सि=वक् + षि = वक्षि | |
| वच् + धि[२] = वग् + धि = वग्धि | वच् + अन्ति = ब्रुवन्ति | वगेरे. |
| अ + वच् + स् – त् = अवच् = अवक्–ग् . | | |

१ બીજા ગણના આકારાંત ધાતુઓને ભૂતકાળ ત્રીજા પુરુષ બહુવચનમાં વિકલ્પે उस् પ્રત્યય લગાડવામાં આવે છે. उस् પ્રત્યય પહેલાં ધાતુના અંત્ય आ નો લોપ થાય છે.

૨ અનુનાસિક કે અંત:સ્થ સિવાયનું કોઈ વ્યંજન બીજા ગણના ધાતુના અંગને છેડે આવે, તો આજ્ઞાર્થ બીજા પુરુષ એકવચનમાં धि પ્રત્યય લગાડવામાં આવે છે.

१. वच् ધાતુનું વર્તમાનકાળ ત્રીજા પુરુષ બહુવચનનું રૂપ થતું નથી. તેને બદલે ब्रुवन्ति રૂપ લેવામાં આવે છે.

अद् + सि = आत्सि | अ + अद् + अ + स् = आदः
अ + अद् + व = आद्व | अ + अद् + अ + त् = आदत्

२. ભૂતકાળના स् અને त् પ્રત્યયો પહેલાં अद् ધાતુને આગમ अ લાગે છે.

आस् + से = आस्से | आस् + ध्वे = आध्वे
अ + आस् + इ = आसि | अ + आस् + ध्वम् = आध्वम् વગેરે.

३. ध् થી શરૂ થતા પ્રત્યયો પહેલાં आस् ધાતુના અંત્ય स् નો લોપ થાય છે.

शी + ए = शे + ए = शये | शी + अते = शे + र् + अते = शेरते
शी + से = शे + से = शेषे | अ + शे + अत = अशेर् + अत = अशेरत

४. (अ) કાળના પ્રત્યયો લગાડતાં પહેલાં शी ધાતુના ई નો ए કરવામાં આવે છે.

(ब) ત્રીજા પુરુષ બહુવચનના अते, अत, અને अताम् પ્રત્યયો પહેલાં शी ધાતુને આગમ र् લગાડવામાં આવે છે.

अ + सू + इ = असुव् + इ = असुवि | सू + ऐ = सुव् + ऐ = सुवै
सू + आथे = सुव् + आथे = सुवाथे | सू + से = सूषे

५. (अ) આજ્ઞાર્થ પહેલા પુરુષના ऐ, आवहै, અને आमहै, પ્રત્યયો પહેલાં सू માંના ऊ નો ગુણ થતો નથી.

(ब) ધાતુના અંતે આવેલા इ કે उ (હ્રસ્વ અગર દીર્ઘ) નો સ્વરથી શરૂ થતા અવિકારક પ્રત્યયો આગળ इय् કે उव् થાય છે.[1]

---

१ इ ધાતુને આ નિયમ લાગતો નથી, પરતુ अधि + इ (आ.) ને લાગુ પડે છે.

ब्रू + मि = ब्रो + ई + मि = ब्रवीमि ब्रू + आनि = ब्रो + आनि = ब्रवानि
ब्रू + तु = ब्रो + ई + तु = ब्रवीतु अ + ब्रू + अन् = अ+ब्र्+उव्+अन् = अब्रुवन्

૬. વ્યંજનથી શરૂ થતા વિકારક પ્રત્યયો પહેલાં ब्रू ધાતુને આગમ ई લગાડવામાં આવે છે.

नु + मि = नौ + मि
अ+नु + अम् = अनो + अम् = अनवम्
नु + अन्ति = न् + उव् + अन्ति
= नुवन्ति

૭. વ્યંજનથી શરૂ થતા વિકારક પ્રત્યયો પહેલાં ધાતુને અંતે આવેલા उ ની વૃદ્ધિ થાય છે.

स्तु + सि = स्तौ + सि=स्तौषि
स्तु + ई + सि = स्तौ + ई + सि = स्तवीषि
अ + स्तु + अम् = अ + स्तौ + अम्
= अस्तवम्
स्तु + वः = स्तुवः
स्तु + ई + वः = स्त् + उव् + ई + वः
= स्तुवीवः
स्तु + अन्ति = स्त् + उव् + अन्ति
= स्तुवन्ति

૮. વ્યંજનથી શરૂ થતા પ્રત્યયો પહેલાં स्तु અને रु ધાતુને વિકલ્પે ई આગમ લાગે છે.

रुद् + मि = रोद् + इ + मि = रोदिमि
रुद् + वः = रुद् + इ + वः = रुदिवः
अ + रुद् + स् = अरोद् + ई + स् = अरोदीः
= अरोद् + अ + स् = अरोदः
रुद + याम् = रुद्याम्
स्वप् + ताम् = स्वपिताम्

૯. ( अ ) रुद्, स्वप्, श्वस्, अन्, અને जक्ष् ધાતુઓને य् સિવાયના કોઈપણ વ્યંજનથી શરૂ થતા પ્રત્યયો પહેલાં इ આગમ લાગે છે.

( ब ) ભૂતકાળના स् અને त् પ્રત્યયો પહેલાં આ ધાતુઓને अ અને ई આગમ લાગે છે.

जक्ष् + अति = जक्षति
अजक्ष् + उस् = अजक्षुः
अजक्ष् + स् = अजक्ष् + अ + स् = अजक्षः
अजक्ष् + ई + स् = अजक्षीः

१०. जक्ष् धातुने त्रीजा पुरुष बहुवचनमां अन्ति. अन् अने अन्तु ने बदले अनुक्रमे अति, उस् अने अतु प्रत्ययो लागे छे.

अस् + ति = अस्ति अस् + सि = असि

आ + अस् + अम् = आसम् अस् + वः = स्वः

आ + अस् + स् – त् = आस् + ई + स् – त्=आसीः–सीत्

आ + अस् + व = आ + स्व = आस्व

११. ( अ ) अविकारक प्रत्ययो पहेलां अस् मांनो अ उडावी मूकवामां आवे छे.

( ब ) वर्तमानकाळना बीजा पुरुष एकवचनना सि प्रत्यय आगळ अस् मांनो स् ऊडी जाय छे.

( क ) भूतकाळना बीजा अने त्रीजा पुरुषना एकवचनना प्रत्ययो आगळ ई आगम लागे छे.

( ड ) आज्ञार्थ बीजा पुरुष एकवचनमां अस् नुं रूप एधि थाय छे.

---

संस्कृतमां अनुवाद करोः—

( १ ) प्राणीओने मनुष्योमां विश्वास नथी ( वि+श्वस् ).

( २ ) भाईभाईमां आजे विश्वास नथी.

( ३ ) युधिष्ठिरना वचनथी छेतरायला द्रोणाचार्य बाणशय्या पर सूता ( शी, अधि+शी, स्वप् ).

( ४ ) अमे सांजे बगीचामां बांकडापर बेसीए छीए ( अधि+आस् ).

( ५ ) सवार सांज झाडनी घटाओमां पक्षीओ मधुर स्वरे गाय छे ( रु ).

( ६ ) पिताए जेने मार्यो छे एवो ते बाळक लांबा वखत सुधी रड्यो (रुद्).

( ७ ) निशाळमां छोकराओ अनेक विषयो भणे छे ( अधि+इ ).

( ८ ) तुं जेने जेने जुए तेने नम्र वचनो कहे ( ब्रू ).

(૯) સજ્જનો પોતાની મોટાઈ ગાઈ બનાવતા નથી ( ब्रू ), પણ કાર્યોથી જણાવે છે.

(૧૦) વલ્કલધારી ( वस् ) શકુન્તલા મહારાણીઓને પણ રૂપમાં ચડી જતી ( अति+शी ).

(૧૧) આપણે ગમે તે મળી આવે તે ખાવું જોઇએ નહિ ( अद् ).

(૧૨) સંતુષ્ટ માણસને સુખ આવી મળે છે ( अभि+इ ).

(૧૩) પૈસાદારોના વખાણ કરવા જોઇએ નહી ( स्तु ), પણ વિદ્વાનોના ગુણો વખાણવા જોઇએ ( नु ).

(૧૪) જેઓ દુર્જનો તરફ બેદરકાર રહે છે ( उद्+आस् ) તેઓ પડતીને પામે છે ( अभि+इ ).

(૧૫) બારણે બેઠેલો ( आस् ) આ ભિખારી ભગવાનના ગુણ ગાય છે ( स्तु ).

## શબ્દકોશ

### બીજા ગણના ધાતુઓ

**अद्**=ખાવું

**अस्**=હોવું, થવું

**आस्**=બેસવું

**उद्+आस्**=ઉદાસીન રહેવું

**इ**=જવું **अधि** (आ)=શીખવું **अभि**=આવી મળવું **उद्**=ઊગવું **उप**=પહોંચવું

**ख्या**=કહેવું आ+ख्या

**नु**=વખાણવું

**प्राण्**=જીવવું

**ब्रू**=કહેવું

**शी**=પડી રહેવું अधि+शी*–**अति**=ચડી જવું

**श्वस्**=શ્વાસ લેવો–वि=વિશ્વાસ કરવો

**सू**=જન્મ આપવો प्र+सू

**स्तु**=વખાણવું

**ह्नु**=છુપાવવું अप+ह्नु

---

**अनवाप्त** ( वि. )=ન મળેલું

**अप्राप्तकालः** ( ન. )=અયોગ્ય વખત

**अवज्ञानम्** ( ના. )=અવગણના

**आक्रान्त** ( કૃ. )=સહેવાયલું

**आदिकविः** ( ન )=વાલ્મીકિ

**आसीन** ( કૃ. )=બેઠેલો

**ऊर्ध्वम्** ( અ. )=ઊંચે

**कदली** ( નારી )=કેળ

---

* સકર્મક હોવાથી અધિકરણ વાચક શબ્દ બીજીમાં આવે છે.

**कल्पद्रुमः** ( न. )=ઇચ્છિત વસ્તુ આપનારું ઝાડ
**खलु** ( અ. )=ખરેખર
**जन्मभाज्**=જન્મ ધારણ કરનાર
**जामदग्निः** ( न. )=જમદગ્નિનો પુત્ર, પરશુરામ
**द्विः** ( અ. )=બે વાર
**धरा** ( નારી )=પૃથ્વી
**धामन्** ( ના. )=તેજ
**नि+सद्** [ **निषीद्** ]=બેસવું
**प्रतिस्तवम्** ( ના. )=સામા વખાણ
**भगः** ( न. )=નસીબ
**राधेयः** ( न. )=રાધાનો પુત્ર, કર્ણ
**वि+धा**=કરવું
**सगन्धः** ( न. )=સમાન ગન્ધવાળો, સ્નેહી
**सलीलम्** ( અ. )=સહેલાઇથી
**सहस्रधामन्** ( न. )=સૂર્ય
**सामर्ष** ( वि. )=ગુસ્સે થયેલો
**सुखम्** ( અ. )=સહેલાઇથી, સુખમાં

---

છેતરાયલો=**वञ्चित**
બાંકડો=**पीठम्** , **फलकः**
ઘટા=**कुञ्जः–जम्**

---

**મનોયત્ન ૭૩:** કૌંસમાં આપેલા ધાતુના યોગ્ય રૂપો વાપરોઃ—

( i ) उद्योगिनं पुरुषसिंहम् ——— लक्ष्मीः । ( उप+इ )
( ii ) यः ——— स जीवति । ( प्राण् )
( iii ) नारायणः शेषे सुखम् ——— । ( शी )
( iv ) धनवन्तं धनेच्छया जनाः ——— । ( स्तु )
( v ) सूनृता वाक् कीर्तिं ——— । ( सू )
( vi ) ( कियत् ) विद्या भवता ——— । ( अधि+इ )
(vii) हंसो मनुष्यवाचा दमयन्तीम् ——— । ( ब्रू )

**મનોયત્ન ૭૪:** ( अ ) નીચેનાં રૂપો ઓળખોઃ—

( i ) आस्त, एहि, ब्रुवन्ति, यति, सुवीय, आसि, भान्ती, ब्रुवाणाः, प्रासूत, स्तूयमानात्, उदासीत.
( ii ) आयन्ति–आयान्ति; आस्त–आसत; आसि–आसीः, स्नान्ति–स्नान्ती.
( ब ) નીચેનાં ધાતુઓનું વર્તમાનકૃદંત બનાવોઃ–आस्, शी, उद्+इ, वस्, वच्.

---

## પાઠ ૨૮ મો

### સાતમો ગણ

तृष्णां छिन्द्धि ।

सूनृता वाग्दुष्कृतं हिनस्ति ।

मूर्खसहस्रेभ्यः प्राज्ञ एको विशिष्यते ।

कियदवशिष्टं रजन्याः ।

संभावितस्य अपकीर्तिर्मरणादतिरिच्यते ।

हरेः शिशुरपि मदावलिप्तानां नागानां गण्डस्थलानि भिनत्ति ।

न तृणेढीति लोकोऽयं वित्ते मां निष्पराक्रमम् ।

छिन्दन्ति धर्ममर्यादाशृङ्खलां विषयोन्मुखाः ।

काकोऽपि जीवति चिराय बलिं च भुङ्क्ते ।

किं वस्तु विद्वन् गुरवे प्रदेयं त्वया कियद्वेति तमन्वयुङ्क्त ।

स्थाने भवानेकनराधिपः सन् अकिञ्चनत्वं मखजं व्यनक्ति ।

कोषाध्यक्षपदे आत्मानं नियुंक्ष्वेति स राज्ञादिष्टः ।

नानानदीनदशतानि तु पूरयित्वा रिक्तोऽसि यज्जलद सैव तवोत्तमश्रीः ।

गजपुङ्गवो धीरं विलोकयति चाटुशतैश्च भुङ्क्ते ।

निदाघे तुषारशिशिरं पानीयं को वृणक्ति ।

मेघश्यामलः कृष्णो गोपदारकैः समपृणक् ।

प्रभातेऽस्मिन्नुद्याने तरवः फेनधवलानि पुष्पाणि व्यञ्जन्ति ।

सूर्यमण्डलं दिवाचन्द्रपाण्डुरेणेव रजसाच्छादितम् ।

---

**तुषारशिशिरम्**—तुषारः इव शिशिरम् **फेनधवलम्**—फेनः इव धवलम्

**मेघश्यामलः**—मेघः इव श्यामलः **दिवाचन्द्रपाण्डुः**—दिवाचन्द्रः इव पाण्डुः

ઉપમાનાં ત્રણ અંગો પૈકી उपमेय અને उपमान અનુક્રમે પહેલા અને બીજા પદ તરીકે આવે તો **कर्मधारय समास** બને છે એ આપણે ૨૫ મા

પાઠમાં જોયું. કેટલીક વાર ઉપમાન અને સાધારણધર્મ અનુક્રમે પહેલા અને બીજા પદ તરીકે આવે છે ત્યારે પણ **कर्मधारय समास** બને છે. આ સમાસના દાખલાઓ ઉપર નોંધ્યા છે, અને એનો વિગ્રહ ઉપર બતાવ્યા પ્રમાણે થાય છે. આ સમાસો उपमानपूर्वपदकर्मधारय સમાસો કહેવાય છે, અને આગળ દર્શાવેલા સમાસો उपमानउत्तरपदकर्मधारय સમાસો કહેવાય છે.

---

पिष्+अन्ति=पि+न्+ष्+अन्ति=पिंषन्ति　　रुध्+मि=रु+न+ध्+मि=रुनध्मि

रुध्+वः=रु+न्+ध्+वः=रुन्ध्वः　　अञ्ज्+मि=अ+न+ज्+मि=अनज्मि.

સાતમા ગણમાં વિકારક પ્રત્યયો પહેલાં **न** અને અવિકારક પ્રત્યયો પહેલાં **न्** નિશાની લગાડવામાં આવે છે દરેક ગણમાં ગણની નિશાની ધાતુને જોડવામાં આવતી હતી. આ ગણમાં ગણની નિશાની ધાતુને જોડવામાં આવતી નથી, પણ ધાતુમાંના સ્વર અને અંત્ય વ્યંજન એ બેની વચ્ચે મૂકવામાં આવે છે. ગણની નિશાની લગાડતી વખતે ધાતુમાંના અનુનાસિકનો લોપ કરવામાં આવે છે.

भुज् + मि = भुनज् + मि = भुनज्मि　　भुज् + थः = भुञ्ज् + थः = भुङ्क्थः

भुज् + वः = भुन्ज् + वः = भुञ्ज्वः　　भुज् + धि*=भुञ्ज् + धि = भुङ्ग्धि

भुज् + सि = भुनज् + सि = भुनक्+सि　　अ + भुज् + अन = अभुञ्जन.

= भुनक् + षि = भुनक्षि　　अ + भुज् + ग्–त्=अभुनज्=अभुनक्-ग्

૧. **ભૂતકાળના બીજા અને ત્રીજા પુરુષ એકવચનના स् અને त् પ્રત્યયોનો વ્યંજન પછી લોપ થાય છે.** આમ કરવાથી પદાન્તે આવેલા અનુનાસિક સિવાયના વ્યંજનને બદલે તેના વર્ગનો પહેલો કે ત્રીજો અક્ષર મૂકવામાં આવે છે.

આજ પ્રમાણે युज्, विज्, अञ्ज्, भञ्ज् વગેરે ધાતુઓનાં રૂપો થાય છે. તેમજ पृच् નાં पृणच्मि, पृञ्च्वः, पृणक्षि, पृङ्क्थः, पृङ्ग्धि अपृणक्–ग्, अपृञ्चन् વગેરે રૂપો થાય છે. रिच् અને विच् નાં રૂપો पृच् પ્રમાણે થાય છે.

---

* ધાતુના અંગને છેડે અનુનાસિક કે અંતઃસ્થ સિવાયનું વ્યંજન આવે તો આજ્ઞાર્થ બીજા પુરુષ એકવચનમાં धि પ્રત્યય લાગે છે.

क्षुद् + सि = क्षुणत् + सि = क्षुणत्सि    अ + क्षुद् + स् = अक्षुणद् = अक्षुणः-त-द्
क्षुद् + थः = क्षुन्त् + थः = क्षुन्त्थः    अ + क्षुद् + त् = अक्षुणद् = अक्षुणत्-द्

**૨. ભૂતકાળના બીજા પુરુષ એકવચનના स् પ્રત્યય આગળ ધાતુના અંતે આવેલા द् નો વિકલ્પે र् કે વિસર્ગ કરવામાં આવે છે.**

એજ પ્રમાણે खिद्, भिद्, विद् વગેરે ધાતુઓનાં રૂપો થાય છે.

छिद्નાં રૂપ પણ એજ પ્રમાણે થાય છે, પણ ભૂતકાળના अ આગમની પછી छ્ની પહેલાં च् મૂકવામાં આવે છે. अच्छिनदम्–अच्छिन्द्व વગેરે.

पिष् + मि = पिनष् + मि = पिनष्मि    पिष् + सि = पिनष् + सि = पिनक् + सि = पिनक् + षि = पिनक्षि
पिष् + थः = पिन्ष् + थः = पिंष्ठः    पिष् + धि = पिंष् + धि = पिंड् + धि = पिण्ड् + ढि = पिण्ड्ढि
अ + पिष् + स्–त् = अपिनष् = अपिनट्-ड्

**૩. (अ) ह् અથવા ष् પછી स् આવે તો ह् કે ष् નો क् કરવામાં આવે છે.**

**(ब) કોઈ પણ પદમાં અનુનાસિક સિવાયના વ્યંજન પછી કોઈ વર્ગનો ત્રીજો અગર ચોથો અક્ષર આવે તો પહેલા વ્યંજનને બદલે તેના વર્ગનો ત્રીજો અક્ષર મૂકવામાં આવે છે.**

हिन्स् + मि = हिनस् + मि = हिनस्मि; अ + हिनस् + स् = अहिनस् = अहिनः-त-द्
हिन्स् + सि = हिनस् + सि = हिनस्सि; अ + हिनस् + त् = अहिनस् = अहिनत-द्
हिन्स् + धि = हिन्धि.

**૪. (अ) ધાતુને અંતે આવેલા स् નો ભૂતકાળ ત્રીજા પુરુષ એકવચનના त् પ્રત્યય પહેલાં त् કે द् થાય છે. બીજા પુરુષના स् પહેલાં આ ફેરફાર વિકલ્પે થાય છે.**

**(ब) ध् થી શરૂ થતા પ્રત્યયો પહેલાં આગળ આવેલો स् ઉડાવી મૂકવામાં આવે છે.**

इन्ध् + से = इन्त्से          इन्ध् + ते = इन्ध् + धे = इन्द् + धे = इन्द्धे

इन्ध् + वहे = इन्ध्वहे     अ + इन्ध् + थाः = ऐन्ध् + धाः = ऐन्द् + धाः = ऐन्द्धाः

**૫. કોઈ પણ વર્ગના ચોથા વ્યંજન પછી त् કે थ् થી શરૂ થતો પ્રત્યય આવે તો त् કે थ् નો ध् થાય છે.**

रुध् + सि = रुणध् + सि = रुणत्सि          रुध् + थः–तः = रुन्ध् + थः·तः = रुन्ध् + धः = रुन्द् + धः = रुन्द्धः

अ + रुध् + त = अरुणत्-द्

तृह् + सि = तृणेह् + सि = तृणेढ् + सि = तृणेक् + सि = तृणेक् + षि = तृणेक्षि          तृह् + ति = तृणेह् + ति = तृणेढ् + ति = तृणेढ्+धि = तृणेढ् + ढि = तृणेढि

तृह् + थः = तृण्ढ् + धः = तृण्ढ् + ढः = तृण्ढः          अ + तृह् + स्–त् = अतृणेढ् + स्–त् = अतृणेढ् = अतृणेट्–ड्

**૬. (अ) ધાતુને અંતે ह આવે અને તેના પછી અનુનાસિક કે અંતસ્થ સિવાયનું કોઈ વ્યંજન આવે અગર કંઈ ન આવે તો ह નો ढ् કરવામાં આવે છે.**

**(ब) ढ् પછી ढ आવે તો પહેલા ढ् નો લોપ થાય છે અને (ऋ સિવાયનો) આગલો સ્વર હ્રસ્વ હોય તો દીર્ઘ કરવામાં આવે છે.**

---

સંસ્કૃતમાં અનુવાદ કરો:—

(૧) અમે દિવસમાં બે વાર જમીએ છીએ (भुज्).

(૨) હિરણ્યકે પોતાના મિત્ર ચિત્રગ્રીવના બંધનો પોતાના કુમળા દાંતો વડે કાપી નાખ્યાં (छिद्).

(૩) પહેલાં શરીરે તેલ ચોળો (अञ्ज्) અને પછી ગરમ પાણીએ સ્નાન કરો.

(૪) ભીમે કીચકના શરીરનો ચૂરો કરી નાખ્યો (क्षुद्).

(૫) તમે આ કામ તમારા ભાઇને સોંપો (नि+युज्).

(૬) વૈતરો દવાને ઘૂંટી લોટ કરે છે (पिष्).

(૭) આમ બોલીને તમે શા માટે તમારી ઉદ્ધતાઈ બતાવો છો (वि+अञ्ज्).

(૮) ઉતાવળે દોડવામાં તમે આ સુંદર ઘડો ભાંગી નાંખ્યો (भञ्ज्).

